॥ नवग्रहकृतयः मुत्तुस्वामिदीक्षितविरचित ॥

१ सूर्यः

राग- सौराष्ट्र ताल- चतुश्रजाति-ध्रुव

सूर्यमूर्ते नमोऽस्तु ते सुन्दर छायाधिपते ।

कार्यकारणात्मक जगत्प्रकाशक सिंह-राश्यधिपते
आर्यविनुत तेजःस्फूर्ते आरोग्यादि-फलद-कीर्ते ।

सारसमित्र मित्र भानो सहस्रकिरण कर्णसूनो
क्रूर-पाप-हर कृशानो गुरुगुह-मोदित-स्वभानो
सूरिजनेडित सुदिनमणे सोमादिग्रह-शिखामणे
धीरार्चित कर्मसाक्षिणे दिव्यतर-सप्ताश्व-रथिने
सौर-अष्टार्ण-मन्त्रात्मने सौवर्ण-स्वरूपात्मने
भारतीश-हरि-हरात्मने भुक्ति-मुक्ति-वितरणात्मने ॥

२ चन्द्रः

राग- असावेरी ताल- चतुश्रजाति मट्य

चन्द्रं भज मानस साधु-हृदय-सद्दशम् ।

इन्द्रादि-लोकपालेडित-तारेशं
कमनीय-कटक-राश्यादीपम् ।
इन्दुं षोडश-कला-धरं निशाकरं
इन्दिरा-सहोदरं सुधाकरं अनिशम् ।

शङ्कर-मौळि-विभूषणं शीत-किरणं
चतुर्भुजं मदन-छत्रं क्षपाकरं
वेङ्कटेश-नयनं विराण्मनो-जननं
विधुं कुमुद-मित्रं विधि-गुरुगुह-वक्त्रं
शशाङ्कं गीष्पति-शापानुग्रह-पात्रं
शरच्चन्द्रिका-धवळ-प्रकाश-गात्रं
कङ्कण-केयूर-हार-मकुटादि-धरं
पङ्कजरिपुं रोहिणी-प्रियकर-चतुरम् ॥

३ अङ्गारकः

राग- सुरटि ताल- चतुश्रजाति रूपक

अङ्गारकमाश्रयाम्यहं विनताश्रितजनमन्दारं
मङ्गळवारं भूमिकुमारं वारं वारं ।

भृङ्गारकं मेष-वृश्चिक-राश्यधिपतिं
रक्ताङ्गं रक्ताम्बरादि-धरं शक्ति-शूल-धरं
मङ्गळं कम्बु-गळं मञ्जुळ-तर-कर-युगळं
मङ्गळ-दायक-मेष-तुरङ्गं मकरोत्तुङ्गम् ।

दानव-सुर-सेवितं मन्दस्मित-विलसित-वक्त्रं
धरणी-प्रदं भ्रातृ-कारकं रक्त-नेत्रं
दीन-रक्षकं पूजित-वैद्यनाथ-क्षेत्रं
दिव्यौघादि-गुरुगुह-कटाक्षानुग्रह-पात्रं
भानु-चन्द्र-गुरु-मित्रं भासमान-सुकळत्रं
जानुस्थ-हस्त-चित्रं चतुर्भुजमतिविचित्रम् ॥

४ बुधः

राग- नाटकुरञ्जि ताल- मिश्रजाति झम्प

बुधमाश्रयामि सततं
सुरविनुतं छन्द्र-तारा-सुतम् ।

बुधजनैर्-वेदितं भूसुरैर्-मोदितं
मधुर-कविता-प्रदं महनीय-सम्पदम् ।

कुङ्कुम-समद्युतिं गुरुगुह-मुदाकृतिं
कुजवैरिणं मणि-मकुट-हार-केयूर-
कङ्कणादि-धरणं कमनीय-तर-मिथुन-
कन्याधिपं पुस्तक-करं नपुंसकं
किङ्कर-जन-महितं किल्बिषादि-रहितं
शङ्कर-भक्त-हितं सदानन्द-सहितम् ॥

५ बृहस्पतिः

राग- अठाण          ताल- तिश्रजाति त्रिपुट

बृहस्पते तारापते ब्रह्मजाते नमोऽस्तु ते ।

महाबल विभो गीष्पते मञ्जु-धनुर्-मीनाधिपते
महेन्द्राद्युपासित-कृते माधवादि-विनुत-धीमते ।

सुराचार्य-वर्य वज्रधर शुभलक्षण जगत्-त्रय-गुरो
जरादि-वर्जित अक्रोध कच-जनक आश्रित-जन-कल्पतरो
पुरारि-गुरुगुह-संमोदित पुत्र-कारक दीन-बन्धो
परादि-चत्वारि-वाक्-स्वरूप-प्रकाशक दया-सिन्धो
निरामयाय नीतिकर्त्रे निरङ्कुशाय विश्व-भर्त्रे
निरञ्जनाय भुवन-भोक्त्रे निरंशाय महा-प्रदात्रे ॥

६ शुक्रः

राग- परशु          ताल- खण्डजाति अट

श्रीशुक्र-भगवन्तं चिन्तयामि सन्ततं सकल-तत्त्वज्ञम् ।

हे शुक्र-भगवन् मा-
माशु पालय वृषतुला-
धीश दैत्य-हितोपदेश
केशव-कटाक्षैक-नेत्रं किरीटधरं धवळ-गात्रम् ।

विंशति-वत्सरोडु-दशा-विभागं अष्टवर्गं
कविं कळत्र-कारकं रवि-निर्जर-गुरु-वैरिणं
नवांश-होरा-द्रेक्काणादि-वर्गोत्तमावसर-समये
वक्रोच्च-नीच-स्वक्षेत्र-वर-केन्द्र-मूल-त्रिकोणे
त्रिंशांश-षष्ठ्यंशैरावतांश-पारिजातांश-
गोपुरांश-राजयोग-कारकं राज्यप्रदं गुरुगुहमुदम् ॥

७ शनैश्चरः

राग- यदुकुलकांभोधि     ताल- मिश्रजाति एक

दिवाकर-तनूजं शनैश्चरं धीरतरं सन्ततं  चिन्तयेऽहम् ।

भवाम्बु-निधौ निमग्न-जनानां भयंकरं अति-क्रूर-फलदं
भवानीश-कटाक्ष-पात्र-भूत-भक्तिमतां अतिशय-शुभ-फलदम् ।

कालाञ्जन-कान्ति-युक्त-देहं काल-सहोदरं काक-वाहं
नीलांशुक-पुष्प-मालावृतं नील-रत्न-भूषणालङ्कृतं
मालिनी-नुतं गुरुगुह-मुदितं मकर-कुम्भ-राशि- नाथं तिल-
तैल-मिश्रितान्न-दीप-प्रियं दया-सुधा-सागरं निर्भयं
काल-दण्ड-परिपीडित-जानुं कामितार्थ-फलद-कामधेनुं
काल-चक्र-भेद-चित्र-भानुं कल्पित-छाया-देवी-सूनुम्  ॥

८  राहुः

राग- रामप्रिय       ताल- चतुश्रजाति रूपक

स्मराम्यहं सदा राहुं सूर्य-चन्द्र-वीक्ष्यं विकृत-देहम् ।

सुरासुरं रोग-हरं सर्पादि-भीति-हरं
शूर्पासन-सुखकरं शूलायुध-धर-करम् ।

कराळ-वदनं कठिनं कयानार्ण-करुणार्द्र-अपाङ्गं
चतुर्भुजं खड्ग-खेटादि-धरणं
चर्मादि-नीलवस्त्रं गोमेदकाभरणं
शनि-शुक्र-मित्र-गुरुगुह-सन्तोषकरणम् ॥

९  केतुः

राग- चामर        ताल- चतुश्रजाति रूपक

महासुरं केतुमहं भजामि छायाग्रहं वरम् ।

महा-विचित्र-मकुट-धरं मङ्गल-वस्त्रादि-धरं
नर-पीठ-स्थितं सुखं नवग्रह-युतं सखम् ।

केतुं कृण्वन्-मन्त्रिणं क्रोध-निधि-जैमिनं
कुलुत्तादि-भक्षणं कोण-ध्वज-पताकिनं
गुरुगुह-चामर-भरणं गुणदोष- जिताभरणं
ग्रहणादि-कार्य-कारणं ग्रहापसव्य-सञ्चारिणम् ॥